।। श्री राधा कृष्ण

।। श्री लक्ष्मी नारायण मिश्र

मु॰ कीउरलीया -

पो॰ दरौली -

जी॰ छपरा -

शोऽशौचाधिकारः ॥ स्त्रीशूद्रयोस्तु विवाहस्योपनय-
नस्थानापन्नत्वेन विवाहोत्तरमेवाशौचाधिकारः ॥ १ ॥
अथ जननाशौचम् ॥ ॥ गर्भिण्याः मासचतुष्टयप-
र्यन्तं गर्भनाशः स्राव इत्युच्यते ॥ तदा गर्भिण्याः
मासत्रयपर्यन्तं त्रिरात्रं चतुर्थमासे चतूरात्रमाशौच
मस्पृश्यत्वम् ॥ पित्रादिसपिण्डानां स्रावमात्रे स्ना-
नाच्छुद्धिः ॥ २ ॥ गर्भिण्याः पञ्चमषष्ठमासयोर्गर्भ-
नाशः पात इत्युच्यते ॥ तत्र गर्भिण्या माससंख्य
या पञ्च षट् च दिनानि क्रमेणास्पृश्यत्वावहमाशौ-

॥ श्रीगणेशाय नमः ॥ ॥ गणाधिपं नमस्कृत्य प्रत्यूहाद्रिपविं कविम् ॥ त्र्यम्बकेणाशुबोधाय क्रियतेऽशौचनिर्णयः ॥ १ ॥ अर्थतः शब्दतश्चेह पौनरुक्त्यं न दुष्यति ॥ स्फुटबोधाय बालानां ग्रन्थोयं रच्यते यतः ॥ २ ॥ अत्र प्रागुपनयनात्कामचारकामवादकामभक्षा इति गौतमोक्तेरनुपनीतस्य पित्रादिसंस्कारं विनाऽशौचे नाधिकारः ॥ उपनयनोत्तरमपि ब्रह्मचारिणः पित्राद्यन्तकर्मकरण एवाशौचाधिकारो नान्यत्र ॥ तस्माद्द्विजानां समावर्तनोत्तरं निरङ्कु-

चम् ॥ पित्रादिसपिण्डाना तु त्रिरात्रं जननाशौचं मृताशौचं तु नास्ति ॥ इदमेतावत्पर्यन्तं सर्ववर्णसाधारणं वयोवस्थानिमित्तत्वात् ॥ ३ ॥ गर्भिण्याः सप्तममासप्रभृतिप्रसवे सर्वेषां मातापित्रादीनां सपिण्डानां विप्राणां दशाहम् ॥ क्षत्रियाणां द्वादशाहम् ॥ वैश्यानां पञ्चदशाहम् ॥ शूद्राणां मासम् ॥ सच्छूद्रस्य मासार्धम् जननाशौचम् ॥ मृताशौचं तु नास्ति ॥ सापत्नमातुः सर्वत्र पितृवत् ॥ ४ ॥ जननाशौचे गर्भि-

---

१ संकरजातीनां शूद्रवत् ॥ विज्ञानेश्वरस्तु नैषामाशौचं किंतु स्नानमात्रमित्याह सर्ववर्णेषु दशाहं वा ।

ण्याः दशाहमस्पृश्यत्वम् ॥ पितुः सापत्नमातुश्च स्नानात्प्रागस्पृश्यत्वम् ॥ स्नानोत्तरं स्पृश्यत्वमेव॥किं तु सर्वत्र सपिण्डानां कर्मानधिकरमात्रम् तत्रापि नालच्छेदनात्पूर्वं जातकर्मदानादौ पितुरधिकारः ॥ एवं प्रथमषष्ठदशमदिवसेषु ॥ जन्मदाख्यदेवतापूजायां च पितुर्वचनाद्धिकारः ॥ कूटस्थमारभ्य सप्तपुरुषपर्यन्तं सपिण्डाः॥ततः सप्त सोदकाः ॥ ततः सप्त सगोत्राः ॥ सोदकानां तु त्रिरात्रमाशौचम् ॥ सगोत्राणां स्नानमात्रम् ॥ ५ ॥ गर्भिण्याः दशाहोत्त-

रं पुत्रोत्पत्तौ विंशातिदिनानि कन्योत्पत्तौ मासपर्यन्तं कर्मानधिकारः ॥ ६ ॥ ॥ इति जननाशौचम् ॥ ॥

अथ मृताशौचम् ॥ ॥ तत्र तद्गतामस्पृश्यत्वं कर्मानधिकारश्चेत्युभयं भवति ॥ मृतजाते शिशौ सर्वेषां सपिण्डानां दशाहं जननाशौचं मृताशौचं तु नास्ति ॥ ७ ॥ नालच्छेदनात्पूर्वं शिशौ मृते मातुर्दशाहम् ॥ पित्रादिसपिण्डानां त्रिरात्रं जननाशौचं मृताशौचं तु नास्ति ॥ ८ ॥ नालच्छेदादूर्ध्वं शिशुमरणे दशाहं जननाशौचं सर्वेषां सपिण्डानामस्ति ॥

मृताशौचं तु नास्ति ॥ ९ ॥ दशाहानन्तरं नामकर-
णात्प्राक् शिशुमरणे स्नानमात्रेण सपिण्डानां शुद्धिः॥
मातापित्रोस्त्रिरात्रं पुत्रमृतौ ॥ कन्यामृतौ तु एका
हः ॥ नाम्नः पूर्वं खननमेव नित्यं नोदकदानादि ॥
अलंकरणं तु सर्वत्र भवति ॥ १० ॥ नामकरणोत्तरं
वर्षपर्यन्तं दाहखननयोर्विकल्पः ॥ ११ ॥ नामोत्तरं
दन्तोत्पत्तेः प्राक् पुत्रमरणे दाहे सपिण्डानामेकाहः ॥
खनने तु स्नानाच्छुद्धिः॥मातापित्रोरुभयत्रापि त्रिरा-
त्रम्॥ कन्यामृतौ तु त्रिपुरुषसापिण्डानाम् उभयत्रापि

स्नानाच्छुद्धिः॥ मातापित्रोरुभयत्रापि एकाहः॥१२॥ दन्तोत्पत्तेरूर्ध्वं वर्षत्रयपर्यन्तं पुत्रमरणे दाहे खनने वा सपिण्डानामेकाहः ॥ मातापित्रोस्त्रिरात्रम् ॥ कन्यामृतौ तु त्रिपुरुषसपिण्डानाम् उभयत्रापि स्नानाच्छुद्धिः ॥ मातापित्रोस्त्रिदिनमाशौचम् ॥ १३ ॥ प्रथमवर्षादौ कृतचूडस्य पुत्रस्य मरणे पित्रादिसपिण्डानां त्रिदिनमाशौचं नियतम् ॥ दाहश्च नियतः ॥ १४ ॥ त्रिवर्षोर्ध्वं कृतचूडस्याकृतचूडस्य वा पुत्रस्य मरणे प्रागुपनयनात्पित्रादिसपिण्डानां त्रिदिन-

माशौचम्॥ दाहश्च नियतः॥ उदकदानादि तूष्णीम्॥ कृतचूडस्य भूमौ पिण्डदानं तूष्णीम्॥ १५॥
कन्यायाःवर्षत्रयानन्तरं वाग्दानात्प्राक्मरणे त्रिपुरुषसपिण्डानामेकाहः॥ मातापित्रोस्त्रिदिनम्॥ दाहोदकदानादि तूष्णीमेव ॥ १६॥ वाग्दानोत्तरं विवाहात्प्राक् मृतासु कन्यासु भर्तृकुले पितृकुले च सप्तपुरुषसपिण्डानां पित्रादीनां सर्वेषां त्रिदिनमाशौचम्॥ दाहोदकदानादि तूष्णीम्॥ १७॥ उपनयनोत्तरं मृतस्य पुरुषस्य सर्वेषां सापिण्डादीनां विप्रा-

णां दशाहम् ॥ क्षत्रियाणां द्वादशाहम् ॥ वैश्यानां पञ्चदशाहम् ॥ शूद्राणां मासम् ॥ सच्छूद्राणां मासार्धम् ॥ सोदकानां त्रिरात्रम् ॥ गोत्रजानां स्नानाच्छुद्धिः ॥ १८ ॥ विवाहोर्ध्वं कन्यायाः पितृगृहे मरणे मातापित्रोः सोदरभ्रातुश्च त्रिरात्रम् ॥ पितृव्यादीनामेकाहः ॥ १९ ॥ ऊढायाः कन्यायाः पितृगृहे प्रसवे मातापित्रोस्त्रिरात्रम् ॥ सोदरस्यैकरात्रम् ॥ पितृव्यादीनामेकाह इति केचित् ॥ २० ॥ पतिगृहे प्रसवे पित्रादीनामाशौचं नास्ति ॥ २१ ॥ ऊ-

ढायाः कन्यायाः पतिगृहे मरणे मातापित्रोस्त्रिरात्रम् ॥ २२ ॥ मातापित्रोर्मरणे ऊढपुत्र्यास्त्रिरात्रं दशाहान्तम्॥ दशाहोर्ध्वे कालान्तरे वत्सरान्तरेऽपि पक्षिणी ॥ अत्रैव अतिक्रान्ताशौचं ब्राह्मणवचनाद्भवति नान्यत्र ॥ २३ ॥ भ्रातृभगिन्योः परस्परगृहमरणे परस्परस्य त्रिरात्रम् ॥ गृहान्तरमृतौ तु परस्परस्य पक्षिणी ॥ २४ ॥ मातुलमरणे भगिन्यपत्यस्य पक्षिणी उपकारिमातुलमरणे तु त्रिरात्रम् ॥ २५ ॥ मातुलान्याः मरणे भर्तृभगिन्यपत्यस्य पक्षिणी ॥ २६ ॥

उपनीतभागिनेयमरणे मातुलस्य मातुलभगिन्या-
श्च त्रिरात्रम् ॥ अनुपनीते मृते तु मातुलस्य मातु-
लभगिन्याश्च पक्षिणी ॥ २७. ॥ मातामहमरणे दु-
हित्रपत्यस्य त्रिरात्रम् ॥ २८ ॥ अनुपनीतदौहित्र-
मरणे मातामहस्य मातामह्याश्च पक्षिणी ॥ उपनी-
ते मृते तु त्रिरात्रमिति केचित् ॥ २९ ॥. मातामा-
ह्यां मृतायां दुहित्रपत्यस्य पक्षिणी ॥ ३० ॥ श्वश्रू-
श्वशुरयोर्मृतौ सत्यां जामातुः सन्निधौ त्रिरात्रम् अस-
न्निधौ पक्षिणी ॥ ग्रामान्तरे चैकरात्रम् ॥ ३१ ॥ जा-

मातरि मृते तु श्वश्रूश्वशुरयोः स्नानाच्छुद्धिः ॥ एकाहमाशौचमिति केचित् ॥ ३२ ॥ श्यालके मृते भगिनीभर्तुरेकाहः ॥ श्यालकसुतमरणे तु स्नानमात्रम् ॥ ३३ ॥ पितृष्वसरि मृतायां भ्रात्रपत्यस्य पक्षिणी ॥ ३४ ॥ मातृष्वसरि मृतायां स्वस्रपत्यस्य पक्षिणी ॥ ३५ ॥ आत्मनः पितृष्वसृमातृष्वसृमातुलपुत्राः आत्मबान्धवाः ॥ पितुःपितृष्वसृमातृष्वसृमातुलपुत्राः पितृबान्धवाः ॥ मातुः मातृष्वसृपितृष्वसृमातुलपुत्राः मातृबान्धवाः ॥ एते त्रिविधा बा-

न्धवाः ॥ बन्धुत्रये एतेषु मृतेषु पक्षिणी॥ पितृष्वस्रा-
दिकन्यानामूढानां मरणे एकाहः ॥ दत्तकमृतौ तु-
पूर्वापरपित्रोस्त्रिरात्रम् ॥ सपिण्डानामेकाहः ॥३६॥
पूर्वापरपित्रोर्मृतौ दत्तकस्य त्रिरात्रम् ॥ ३७ ॥ द-
त्तकस्य. पुत्रपौत्राणां मरणे जनने वा सपिण्डानामे-
काहः ॥ ३८ ॥ सपिण्डे पुत्रीकृते दत्तके मृते तु स-
पिण्डानां दशाह एव ॥ ३९ ॥ आचार्यमरणे शिष्य-
स्य त्रिरात्रम् ॥ तत्पुत्रपत्न्योर्मरणे एकाहः ॥ उप-
नीयाध्यापक आचार्य इत्युच्यते ॥ वेदैकदेशाध्या-

पक उपाध्यायः ॥ तन्मरणे शिष्यस्यैकरात्रम् ॥४०॥ शिष्यस्योपनीतस्य मरणे गुरोस्त्रिरात्रम् ॥ परोपनीतस्य मरणे तु एकरात्रम् ॥ ४१ ॥ सहाध्यायिनो मृतौ एकग्रामीणयोरनूचानश्रोत्रिययोर्मृतौ तु चैकाहः ॥ साङ्गवेदाध्यायी अनूचानः ॥ वेदमात्राध्यायी श्रोत्रियः ॥ अध्ययनशब्दार्थस्यार्थज्ञानपर्यवसायित्वं न्यायासिद्धम् ॥ ४२ ॥ असपिण्डस्यापि श्रोत्रियस्य मैत्रादिसंबन्धस्य यद्गृहे मरणं तद्गृहस्वामिन एकरात्रम् ॥ ४३ ॥ वानप्रस्थे यतौ षण्ढे च

मृते युद्धे च मृते सपिण्डानां स्नानमात्रम् ॥ ४४ ॥
अथातिक्रान्ताशौचम् ॥ तत्र जननेऽतिक्रान्ता शौचं
नास्ति ॥ पितुः स्नानं तत्रापि भवति ॥ मृतके
तु अनुपनीतमरणादिनिमित्तकत्रिरात्रादिषु भगि-
नीमातुलादिमरणनिमित्तकत्रिरात्रादिषु चातिक्रा-
न्ताशौचं नास्ति ॥ किन्तु दशाहादिमृताशौचविषय-
मेव ॥ ४५ ॥ दशाहमध्ये जनने मरणे ज्ञाते पुत्रा-
दीनां च सर्वेषां शेषेणैव शुद्धिः ॥ संस्कारमपि शे-
षेणैव समापयेत् ॥ अस्थिपर्णशरसंस्कारमपि शे-

षेणैव समापयेत् ॥ ४६ ॥ आद्यत्रिरात्रमध्ये समा-
नोदकमरणे ज्ञाते समानोदकानां शेषेणैव शुद्धिः ॥
त्रिरात्रेऽतिक्रान्ते तु दशाहमध्ये ज्ञातेऽपि नाशौचं
किन्तु स्नानमात्रम् ॥ अयमेव न्यायः मातुलादित्रि-
रात्रादिषु ज्ञेयः ॥ ४७ ॥ मातापित्रोर्मरणे दूरदेशे-
ऽपि संवत्सरानन्तरमपि श्रवणे पुत्रो दशाहादिपूर्ण-
मेवाशौचं कुर्यात् ॥ ४८ ॥ स्त्रीपुंसयोः परस्परमरणे
परस्परं देशान्तरे वत्सरान्तरेऽपि पूर्णं दशाहादि भ-
वति ॥ ४९ ॥ सपत्नीषु परस्परमृतौ परस्परस्य देश-

कालावनपेक्ष्य दशाहं पूर्णमेवाशौचं भवति ॥ ५० ॥
सापत्नमातुर्मरणे संवत्सरोर्ध्वमपि देशान्तरेऽपि त्रि-
रात्रम् ॥ ५१ ॥ औरसपुत्रे मृते संवत्सरोर्ध्वमपि
मातापित्रोस्त्रिरात्रम् ॥ ५२ ॥ दशाहोर्ध्वमेकदेशे-
ज्ञातिमरणे ज्ञाते मासत्रयपर्यन्तं त्रिरात्रम् ॥ षण्मा-
सपर्यन्तं पक्षिणी ॥ नवमासपर्यन्तम् एकदिनं तदन-
न्तरं स्नानमात्रमिति वृद्धवसिष्ठः ॥ पक्षत्रयपर्यन्तं
त्रिरात्रम् ॥ षण्मासपर्यन्तं पक्षिणी ॥ वर्षपर्यन्तम्
एकरात्रम् ॥ तदूर्ध्वं स्नानमात्रमिति माधवे देवलः ॥

अत्रापदनापद्विषयत्वेन व्यवस्था द्रष्टव्या ॥ ५३ ॥
दशाहोर्ध्वं देशान्तरे ज्ञातिमरणे ज्ञाते त्रिपक्षपर्यन्तं
त्रिरात्रम् ॥ ततो मासषट्कपर्यन्तम् अहोरात्रम् ॥ ततो
वर्षपर्यन्तं दिवा श्रवणे आसायं रात्रिश्रवणे आप्रा-
तराशौचम् ॥ वत्सरान्ते तु स्नानाच्छुद्धिः ॥ इदं सर्व-
मतिक्रान्ताशौचं सर्ववर्णसाधारणम् ॥ अत्र देशान्त-
रे ज्ञातिमृते ज्ञाते स्नानाच्छुद्धिरिति केचित् ॥ त-
न्माधवोदाहृतविष्णुस्मृत्यज्ञानविलसितमिति ज्ञेय-
म् ॥ देशान्तरं तु विप्रस्य विंशतियोजनान्तरं क्ष-

त्रियस्य चतुर्विंशतियोजनान्तरं वैश्यस्य सच्छूद्रस्य
च त्रिंशद्योजनान्तरम् असच्छूद्रस्य षष्टियोजनान्तरं
ज्ञेयम् ॥ पक्षान्तराणि तु उक्तपक्षानुसारेण ज्ञातव्या-
नि ॥ ५४ ॥ अत्रायं निष्कर्षः ॥ यानि एकगोत्रविषयं
कजननमरणातिक्रान्ताशौचानि तानि जायापति-
भ्यामुभाभ्यामविशेषेणानुष्ठेयानि॥ यानि पुनर्भगिनी-
मातुलादिभिन्नगोत्राशौचानि तेषु जायापतिमध्ये
यत्सम्बन्धं यत्तत्तेनैवानुष्ठेयं नोभाभ्यामिति ॥ ५५ ॥
आहिताग्नेर्मन्त्रवद्दाहदिनमारभ्य पुत्रादिभिराशौचं

कार्यम् ॥ ५६ ॥ आहिताग्नौ प्रोषिते मृते मन्त्रवद्दाहा-
त्पूर्वं पुत्रादीनां नाशौचं सन्ध्यादिकर्मलोपश्च नास्ति
॥५७॥ अनाहिताग्नेस्तु मरणदिनमारभ्य पुत्रादिभि-
राशौचं कार्यम् ॥ ५८ ॥ अथ रात्रौ जनने मरणे वा
रात्रिं त्रिभागां कृत्वाऽऽद्यभागद्वये चेत्पूर्वदिनं तृतीय
भागे चेदुत्तरदिनमारभ्याशौचं कार्यम् ॥ अर्धरात्रा-
त्प्राक् पूर्वदिनं परत उत्तरदिनम् ॥प्राक् सूर्योदयात्पू-
र्वं दिनम्॥ ऊर्ध्वमुत्तरमिति पक्षत्रयं देशान्तरतो व्य-
वस्थितम्॥ महाराष्ट्रदेशे तु आद्यपक्ष एव चरति ॥

॥५९॥ इति त्र्यम्बकीये अतिक्रान्ताशौचनिर्णयः २॥
॥ अथाशौचसम्पाते निर्णयः॥ ॥ तत्र दशाहमृत-
के दशाहं ततो न्यूनं वा मृतकमुपास्थितं भवति तदा
पूर्वशेषेण शुद्धिः॥ ६० ॥ दशाहे सूतके दशाहं ततो
न्यूनं वा सूतकं पतति तदा पूर्वशेषेण शुद्धिः॥ ६१॥
सूतकमध्ये दशाहं न्यूनं वा मृतकं पतति तस्य न
पूर्वेण शुद्धिः ॥ तत्र सूतकस्यावशिष्टत्वे तु मृतकस-
माप्त्या सूतकमपि समापनीयम्॥ ६२ ॥ त्र्यहादि-
रूपे मृतके सूतके च दशाहमृतकपाते दशाहसू-

तकपाते च न पूर्वेण शुद्धिः॥ ६३ ॥ मृतके सूतकस्य समन्यूनस्य वा सम्पाते पूर्वेण शुद्धिः ॥६४॥ अधिकस्यापि सूतकस्य शुद्धिरिति शुद्धिविवेककारः॥६५॥ पूर्वाशौचमध्ये उत्पन्नमपि पूर्वाशौचोत्तरं ज्ञातं चेदुत्तरमेव कार्यम् ॥ दशाहान्त्यरात्रौ यदि दशाहं सूतकं पतति तदा दिनद्वयमधिकं कार्यम् ॥ सा रात्रिः परेद्युश्च ॥ ६६ ॥ दशाहान्त्यरात्रिचतुर्थयामे यदि दशाहमाशौचं पतेत्तदा दिनत्रयमधिकं कार्यम्॥६७॥ त्र्यहाद्याशौचानां परस्परं रात्रिशेषे सम्पाते पूर्वेणैव

शुद्धिः न द्व्यहादिवृद्धिः ॥ ६८ ॥ वर्धिते द्वित्रिदिन-
मध्ये आशौचान्तरसम्पाते च अधिकस्य न पूर्वेण
शुद्धिः ॥ समन्यूनयोस्तु पूर्वेण शुद्धिः ॥ ६९ ॥ सपि-
ण्डाशौचेन मातृपितृभर्तॄणामाशौचं नापैति ॥ ७० ॥
मात्राशौचमध्ये पित्राशौचपाते पूर्वशेषेण शुद्धिः
॥ ७१ ॥ पितुः सम्पूर्णाशौचेन शुद्धिरित्यन्ये ॥ ते-
षां शेषपदस्य पूर्णपरत्वं लाक्षणिकम् ॥ पित्राशौचम-
ध्ये मातृमरणे तु पित्राशौचं समाप्य पक्षिणीम-
धिकं कुर्यात् ॥ ७२ ॥ इदं दशमरात्रेरर्वाग्भवति ॥

दशमरात्र्यां तद्रात्रिचतुर्थयामे च मातृमरणे तु द्व्य-
हं त्र्यहं वेति न पक्षिणी ॥ ७३ ॥ मातुर्भर्त्रा सहा-
न्वारोहणे तु नाधिका पक्षिणी ॥ पूर्वाशौचेन शुद्धिः
॥ ७४॥ सूतिकायाम् अग्निदे प्रेतपुत्रेषु च नास्ति॥
अत्र प्रेतपुत्रेति पुनर्ग्रहणं वचनान्तरानुरोधेन॥७५॥
सूतके मृतकपाते न पिण्डदाने प्रतिबन्धः ॥ मृतके
सूतकसम्पाते जातकर्मादि तदानीमाशौचान्ते वा
कुर्यात् इति विकल्पः ॥ ७६ ॥ मातुर्वाधिका पक्षि-
णी तन्मध्ये पितुरेकादशाहं श्राद्धं कुर्यात् ॥ ७७ ॥

शवस्पर्शो दिवा चेन्नक्षत्रदर्शनाच्छुद्धिः ॥ रात्रौ चे-त्सूर्यदर्शनात् ॥ तदन्नाशने तद्गृहवासे यावत्तेषामा-शौचं तावदाशौचम् ॥ ७८ ॥ संसर्गाशौचे कर्माधि-कारो नास्ति ॥ किंतु अस्पृश्यत्वमात्रम् ॥ ७९ ॥ तद्गृह्याणां तद्द्रव्याणां नाशौचसंबन्धः ॥ ८० ॥ स्ने-हेन सवर्णनिर्हारे तदन्नाशने तद्गृहवासे च दशाहः ॥ तदन्नानशने तद्गृहवासे त्र्यहः ॥ ८१ ॥ अगृहवासे-ऽन्नाभक्षणे निर्हरणमात्रे कृते चैकाहः ॥ ८२ ॥ भृ-तिग्रहणे सवर्णनिर्हारे दाहे च तज्जात्याशौचं द-

शाहादि ॥ ८३ ॥ विजातीयनिर्हारे विजातीयदाहे च शवजातीयमाशौचम् ॥ भृतिग्रहणे विजातीय-निर्हारे दाहे च शवजातीयाद्विगुणम् ॥८४॥ सोदक निर्हारे दशाहः ॥ ८५ ॥ असपिण्डालंकरणे अज्ञाना-दुपवासः अशक्तौ स्नानम् ॥ ज्ञानतः पादकृच्छ्रम् ॥ ८६ ॥ धर्मार्थमनाथसवर्णशवनिर्हरणे क्रियाकर-णेऽग्निदाने च द्विजस्य अनन्तफलम् ॥ स्नानाच्छुद्धिः प्राणायामोऽग्निस्पर्शश्च ॥ ८७॥ धर्मार्थमनाथसव-र्णनिर्हरणादावपि मातुलादिसंबन्धे सति त्रिरात्रसा-

शौचम् ॥ ८८ ॥ अनुगमने तु सपिण्डे न दोषः ॥ असपिण्डेऽपि अनाथक्रियायां न दोषः ॥ ८९ ॥ समोत्कृष्टवर्णीयशवानुगमने स्नात्वा हुताशं स्पृष्ट्वा सर्पिः प्राश्य पुनः स्नात्वा प्राणायामं कुर्यात् ॥ ९० ॥ हीनवर्णशवानुगमने क्षत्रिये एकाहः ॥ वैश्ये पक्षिणी ॥ शूद्रेत्रिरात्रम् ॥ पूर्ववत्स्नानादि च ॥ ९१ ॥ ब्रह्मचारिणः सपिण्डमरणे नाशौचम् ॥ नान्यस्य निर्हारदाहाद्यौर्ध्वदेहिकेऽधिकारः ॥ ९२ ॥ तत्करणे पुनरुपनयनम् ॥ कृच्छ्रप्रायाश्चित्तम् ॥ ९३ ॥ ब्रह्म-

चारिणः पितृमात्राचार्योपाध्यायमातामहानामन्त्य-कर्मकरणे न दोषः ॥ तत्र दशाहमस्पृश्यत्वलक्ष-णमाशौचम् ॥ १४ ॥ दशदिनं संध्याग्निकार्यादिक-र्माधिकारोऽस्त्येव ॥ १५ ॥ एकदिनमस्पृश्यत्वमिति माधवः ॥ १६ ॥ पित्राद्याशौचेऽपि नाशौचिनामन्नं ब्रह्मचारी भक्षयेत् ॥ भक्षणे तु पुनरुपनयनम् ॥ १७ ॥ ब्रह्मचारिणः पित्राद्यन्त्यकर्माकरणे तु पित्रादिमरणे-ऽपि नाशौचम् ॥ १८ ॥ समावर्तनोत्तरं पूर्वमृतानां त्रिदिनाशौचं कार्यमेव ॥ १९ ॥ कृतजीवच्छ्राद्धेन

किमप्याशौचं न कार्यमिति हेमाद्रिः ॥ १०० ॥ वा-
नप्रस्थयतिपतितयोरपि किमप्याशौचं न कार्यम् ॥
तेषामपीतरैर्न कार्यम् ॥ १ ॥ परेषां सर्ववर्णानामौ-
र्ध्वदेहिककरणे तज्जात्याशौचं कृत्वा कृच्छ्रत्रयाच्छु-
द्धिः ॥ २ ॥ हीनवर्णौर्ध्वदेहिककरणे तु शवजातीय-
माशौचं कृत्वा कृच्छ्रत्रयद्वैगुण्याद्यूह्यम् ॥ ३ ॥ आ-
हिताग्नेरस्थिदाहे प्रतिकृतिदाहे वा सर्वसपिण्डानां
दशाहाद्याशौचम् ॥ ४ ॥ अनाहिताग्नेस्तु अस्थिदा-
हे पर्णशरदाहे च पत्नीपुत्रयोः पूर्वमगृहीताशौच-

योः दशाहिकं पूर्णमेव ॥ गृहीताशौचयोस्तुतयोर पि संस्कारकाले त्रिरात्रम् ॥ ५ ॥ पत्नीसंस्कारे पत्युश्चैवम् ॥ सपत्न्योर्मिथश्चैवम् ॥ ६ ॥ अन्यसपिण्डानां पूर्वमगृहीताशौचानाम् अनाहिताग्निसंस्कारकाले त्रिरात्रम् ॥ पूर्वगृहीताशौचानां तु सपिण्डानां संस्कारकाले स्नानमात्रम् ॥ ७ ॥ इदं त्रिरात्रादिकं दशाहोर्ध्वं संस्कारकरणे ज्ञेयम् ॥ दशाहमध्ये तु शेषदिवसैरेवाशौचसिद्धेरुक्तत्वात् ॥ ८ ॥ रजस्वलायास्तु विंशतिदिनोत्तरं प्रायशो रजोदर्शनं भवति त-

स्याः सप्तदशदिनपर्यन्तं पुना रजोदृष्टौ स्नानमात्रम्॥ अष्टादशे एकरात्रम्॥ एकोनविंशे द्विदिनम्॥ विंशतिप्रभृति दिनत्रयम्॥९॥ यस्यास्तु विंशतिदिनादर्वाक्प्रायशो रजोदर्शनं भवति तस्याःदशादिनपर्यन्तं स्नानमात्रम्॥ एकादशे एकरात्रं द्वादशोद्विरात्रं त्रयोदशादारभ्य त्रिरात्रम्॥ ११०॥ इतित्र्यम्बकीयेऽशौचनिर्णये दशोत्तरशतोंऽशः ॥ ११०॥ अत्र मूलवचनानि मिताक्षरादिनिबन्धेभ्यो ज्ञेयानि ॥ तानिविस्तरभिया बालानां दुराधिगमत्वाच्च न लिखितानि ॥

इति आशौचनिर्णयः समाप्तः ॥ ॥ * ॥ ॥



गाडगिळोपाभिध-केशवात्मज-प्रभाकरशास्त्रिणा
संस्कृतोऽयं ग्रन्थः।

इदं पुस्तकं श्रीकृष्णदासात्मजेन गङ्गाविष्णुना
स्वकीये "लक्ष्मीवेङ्कटेश्वर" नामक
मुद्रणयन्त्रालयेऽङ्कितम्।

शकाब्दाः १८१५

संवत् १९५०

गङ्गाविष्णु श्रीकृष्णदास
लक्ष्मीवेङ्कटेश्वर छापाखाना कल्याण-(मुम्बई.)